summary of contents ( §9 ) in the Foreword, or complete the whole work within the limited time at our disposal. Looking to the difficult nature of the book the summary seems to be of assistnace by enabling the less advanced readers better to enter into the subject matter. Pandit Ramaswamy has also very kindly undertaken the preparation of an English translation of the *Kârikâs* of the *Tattvasaṅgraha*, and this useful work we hope to present to the public at no very distant date.

Lastly, we have to thank the authorities of the Nirnaya Sagar Press, which has justly earned a world-wide reputation in the printing of Sanskrit works, for the interest they have taken during the last six years in passing the *Tattvasaṅgraha*, through the press and the care they have exercised in correcting and revising the proofs.

Central Library,
Baroda.
*1st. August 1926.*

**B. Bhattacaryya.**

## LIST OF ERRATA.

---

Page XXIV, line 19. *for* Kumârila *read* **Kumârila's works.**

,, XXXVIII, l. 24. *read* produced by previous experience only.

,, LV, l. 1. *for* Ajitakeaks'ambalî *read* Ajitakes'akambalî.

,, LXXII, l. 13. *for* 345-425 *read* 345-415

,, LXXIII, l. 16. *for* 345-425 *read* 345-415

,, CXV, l. 32. *for* sixteen *read* six.

# प्रस्तावना ।

अयन्त्युत्तुङ्गनिर्वाणसौधसोपानपङ्क्तयः । अनुकूला विनेयानां मुनेः शाक्यस्य देशनाः ॥
अनाधारमनाधेयमनालम्बमनाविलम् । अनाद्यन्तं स्वसंवेद्यं विज्ञानं यत्तदद्वयम् ॥
इदमेव शिवद्वारं सर्वनैरात्म्यदर्शनम् । बालानां त्रासजननं पण्डितानां शिवावहम् ॥

इह खलु भारते प्रदेशे पुरा तरणिकिरणैरप्यनपनोद्यमाभ्यन्तरं तमो मानवानामपनयन्तो विज्ञानालोकप्रसरैर्निःश्रेयसैकान्तानि दर्शनानि यथादर्शनमाविश्चक्रुः कतिचन मुनयः परहितैकप्रवृत्तयो दयार्द्रहृदयाः । तत्र तर्कशलाकाञ्जनोपसंस्कृतेन विलोचनेन मानसेन तत्त्वं परीक्षमाणाः परीक्षितानर्थान् दर्शनपथे प्रापयन्ति कतिचन तत्त्वदर्शिनः । अपरेत्वनादिनिधनमपौरुषेयं किमपि शब्दप्रमाणं वेदलक्षणं प्राधान्येन स्वीकृत्य तदनुकूलैस्तर्कैस्तदेव प्रमाणमप्रकम्प्यमाख्यापयन्तः प्रवर्त्तन्ते तत्त्वरत्नपरीक्षायाम् । एवं द्विविधो वर्गस्तत्त्वदर्शिनाम् । यत्र प्रथमे अर्हत्सुगतादयः कणादकपिलादयश्च । द्वितीये भगवद्बादरायणादयः ।

**सौगतमताव-तारणम् ।**

इदमत्र सम्भाव्यते—तत्र ये कणादगौतमकपिलपतञ्जलयो न तेषां दृष्टिर्मुनेः शाक्यस्येवाद्वितीयतर्कशलाकाञ्जनसुसंस्कृता, येनाप्तवचनकोटौ वेदमीश्वरोच्चरितलक्षणं गणयन्तस्त इमे कथमपि तेनानुकूल्यमापादयितुमिच्छन्तस्तद्वासनावासितचित्ता न प्रभवन्ति विशुद्धेन तर्कशलाकाञ्जनेन दृष्टिमात्मनः सुसंस्कर्त्तुम् । अत एव तेषामादेशाः परीक्षकाणां प्रेक्षावतां न हृदयङ्गमा भवन्ति ।

अयं चादेशो भगवतश्शाक्यमुनेः—

"तापाच्छेदाच्च निकषात् सुवर्णमिव पण्डितैः । परीक्ष्य भिक्षवो ग्राह्यं मद्वचो न तु गौरवात् ॥" इति ।
तीर्थिकानां नेदृशं वचनम् । 'चोदनालक्षणोऽर्थो धर्मः', 'शास्त्रयोनित्वात्' इति तु तेषाम् ।
अयमपरो विभागस्तत्त्वदर्शिनां दर्शनकाराणाम् ।

आत्मानं नित्यमिच्छन्ति सर्व एव तु तीर्थिकाः । न तमिच्छत्यहङ्कारात् भीतः शौद्धोदनिर्मुनिः ॥

इदं च वचनमिह ज्ञापकम्—

"साहङ्कारे मनसि न शमं याति जन्मप्रबन्धो
नाहङ्कारश्चलति हृदयादात्मदृष्टौ च सत्याम् ।
अन्यः शास्ता जगति भवतो नास्ति नैरात्म्यवादी
नान्यस्तस्मादुपशमविधेस्त्वन्मतादस्ति मार्गः ॥" इति । [ त० प० ९०५ ]

इदं च सौगतं दर्शनं शाक्यमुनेः प्रागपि काश्यपकनकमुनिप्रभृतिभिस्तथागतैस्सर्वतः प्रवर्तितं न शाक्योपज्ञम् । परं कालगतिवैचित्र्याद्विरलप्रचारं प्रक्षीणप्रायं भगवता बुद्धेन शाक्येन मुनिना कृपापीयूषवर्षेणेव उपदेशवर्षेण प्रफुल्लितसहकारवनमिव प्रवर्तितामोदविस्तारं प्राकट्यमानीतमिति शाक्यदर्शनमुच्यते । दर्शनस्यास्य सूक्ष्मस्वरूपमनूद्यते च छान्दोग्ये—'तद्धैत आहुरसदेवेदमग्र आसीत्' इति । तद्विज्ञायते सौगतानां दर्शनमूलभूतस्य मतस्य प्रवदतां प्रचलितपारम्पर्यमूलस्तदा तदा नौपनिषदसमयतस्समनन्तरोपक्रमो भवितुमर्हति ।

**सौगतमतस्या-र्वाचीनता ।**

सौत्रान्तिकाद्यवान्तरविभागोत्थानम् तत्संज्ञानिर्वचनं च ।

तस्मिंस्तस्मिन् दर्शने विनेयाशयपरिपाकानुगुण्येन प्रवृत्तान् मुनेः शाक्यस्य देशनाभेदानवलम्ब्य त्रिधा प्रवृत्तः समयभेदः समासतः । स हि भगवान् स्वप्नगन्धर्वनगरकेशोण्डूकादिवत्केवलं ख्यायमानेषु मायामयेष्वखिलेषु भूतभौतिकचित्तचैतेष्वस्थिरत्वस्थिरत्ववासनयाऽत्यन्तविपरीतयाऽनादिकालप्रवृत्तयाऽऽवेष्टितान् दुःखाग्नौ पच्यमानानिमान् मानवान् कथंकथमपि ततः समुद्धृत्य निर्वाणामृतेनाप्लावयन्नुपदिदेश सर्वेषामेषां क्षणविनाशित्वसांवृतत्वशून्यता यथाक्रमम् । तत्र विनेयाः पुनर्मुग्धमध्यमोत्तमाः यथाधिकारमितोऽर्थभेदान् प्रत्यपद्यन्त । क्रमात्तन्मूलाः सर्वास्तित्वविज्ञानमात्रास्तित्वसर्वशून्यत्ववादास्त्रयः प्रावर्तन्त । तेषु प्रथमो वादः सौत्रान्तिकवैभाषिकयोः । द्वितीयो योगाचारस्य । तृतीयो माध्यमिकस्य । अस्ति नाम सौत्रान्तिकवैभाषिकयोर्मिथो मतभेदः । अथापि बाह्यार्थाभ्युपगमे साम्यादेकवर्गे समनुप्रवेशः समुचितः ।

अयं च भेदः कदा कथमभूदित्येतदैतिहासिकदृष्ट्या परिशीलयतां सुगमं नाम । न नस्तद्दृष्टिपाटवम् । अथापि यथोपलम्भं किञ्चिदिहावेदयामः । भगवति शाक्ये मुनौ परिनिर्वाणमुपगते सपदि सर्वे स्थविरा महान्तः समेत्य राजगृहे नगरे ( Rajgir ) भगवतस्तस्य तांस्तानुपदेशांस्तदा तदा सम्प्रवृत्तान् संजगृहुः । सौगतोपदेशपरिरक्षणैकपरा परिषदियं महास्थविरैरधिष्ठिता बुद्धपरिनिर्वाणतः पश्चाच्छरदां शतत्रयस्यान्तरेव वारत्रयं सङ्गता परिनिष्पन्नभगवदुपदेशसङ्ग्रहणा परितः प्रवर्तिततथागतप्रवचना श्रावकजनमनःश्रेयसे समभूत् । ये च तैस्तदा सङ्गृहीता विभक्ताश्च त्रेधा त एवोपदेशास्त्रिपिटकात्मना प्रथन्ते, सुत्तपिटकं विनयपिटकमभिधम्मपिटकञ्चेति । उपदेशाश्च ते मागध्या भाषया प्रवृत्ता नाम । कालेन तावता सौगत एव समयेऽस्मिन् स्थविरवादे मतिभेदमापन्ना बहवः कश्चित्कश्चिदन्यथा विवदमाना अभूवन् । तन्मूलकश्चानेकशाखः सुगतसमयोऽयमभूत् । शाखाश्च ताः—थेर( स्थविर )महासाङ्घिकगोकुलिकादयोऽष्टादश । मान्यता तु स्थविरवादस्यैवाऽभूत् । इदं च महास्थविरोपदेशपरम्परासु संरक्षितं त्रिपिटकं सुगतसमयानुवर्तिनश्चक्रवर्तिनोऽशोकस्य तनयो महींदः सिलोनदेशं नीत्वा तत्र परितो विततप्रचारं चकार । कालेनास्य त्रिपिटकस्य तत्र लेखनक्रमः समभूत् ।

अथ समतिक्रान्तेऽनेकशत ( ३०० ) संवत्सरपरिपूर्णे काले कालयोगेन कश्चिद्राजा नाम्ना कनिष्को भारतदेशमाविश्य काश्मीरादिषु कृतशासनः समादृतसौगतसमयो बभूव । समये तस्य राज्ञस्तदादराहितावलम्बा काचित्परिषन्महती जालन्धरनगरे पूर्णकापरनामकेन पार्श्वेन वसुमित्रेण चाधिष्ठिता समभूत् । तदैव त्रिपिटकार्थान्परिशील्य त्रयो निबन्धाः संस्कृतभाषया समतन्यन्त । सुत्तपिटकस्यानुबन्धी सूत्रोपदेशः विनयपिटकस्य विनयविभाषाऽभिधर्मपिटकस्याभिधर्मविभाषा । ये च शाखाभेदा दर्शनेऽस्मिन्नष्टादश पुराऽभूवंस्तासु काश्चन कालेन लुप्ताः पुनरपराश्च समुत्पन्ना अन्ततः सङ्ख्यातस्तथैव परिनिष्ठिता राज्ञोऽस्य समयेऽप्यासन् । परमेते समासतः—आर्यसर्वास्तिवादी, आर्यसम्मितीयः, आर्यमहासाङ्घिकः, आर्यस्थविरश्चेति चतुर्धाऽवर्तन्त । तत्र पूर्वौ द्वौ वैभाषिक इत्याख्यायाः पदं भवतः । अपरौ द्वौ सौत्रान्तिक इत्याख्यायाः । य एते तत्त्वनिर्णये भगवतो बुद्धस्य वचनतस्तद्विवरणभूतविभाषाशास्त्रमभिधर्मविभाषाख्यं प्रमाणमवलम्बन्ते त एते वैभाषिका इत्याख्यायन्ते । ये पुनः सूत्रान्तं भगवद्बुद्धवचनं सुत्तन्तसंज्ञं प्रमाणतमं मन्यन्ते त एते सौत्रान्तिका इति । संज्ञा चेयमेषां कालेन क्रमशः प्ररूढा नाम । राज्ञोऽस्य कनिष्कस्य समयतः पूर्वमेव कात्यायनीपुत्र-

कृतिरभिधर्मज्ञानप्रस्थानशास्त्राख्या संस्कृतभाषोपनिबद्धाऽऽसीत् । यस्या विवरणपदमधिरोहति राज्ञोऽस्य समये समुपनिबद्धोऽभिधर्मविभाषाख्यो ग्रन्थः । तदिदं द्वयं वैभाषिकाणामादरभाजनं विशेषतः । अस्य च राज्ञः समये सौगतसमये संस्कृतभाषाप्राधान्यं तथा महायानसंज्ञयोपलक्षितः प्रभेदश्च प्रादुरभूत् । सौगतसमयः समभवत् । क्रमात्ततः समभवंश्च निबन्धा महायाननिष्ठानां मान्यतमाः—अष्टसाहस्रीप्रज्ञापारमिता, गण्डव्यूहः, दशभूमीश्वरः, समाधिराजः, लङ्कावतारसूत्रम्, सद्धर्मपुण्डरीकः, तथागतगुह्यकम्, ललितविस्तरः, सुवर्णप्रभासश्चेति नव धर्मसंज्ञाः । तदयं कनिष्क एव महायानप्रचारस्य प्रथमावलम्बभूतः । प्रवृद्धश्चान्यत्र सौगते समये हीनयानमिति प्रवादस्ततः प्रभृति । स चायं महायानसंज्ञयोपलक्षितः सौगतसमयो जपानप्रभृत्यौत्तरे विभागे प्रवृद्धोऽभवत् । इत एव महायानपथद्विभक्तौ योगाचारमाध्यमिकमार्गौ । योगस्याचरणात्प्रमुदितादिभूमिदशकसिद्धेर्योगाचरणस्यावश्यकत्वं मेनिरे, त एते योगाचारा उच्यन्ते । अपरे वदन्ति योगस्याचरणेनालयविज्ञानं समुपलब्धं न वादेनेति योगाचारशब्देन ज्ञायत इति । भास्कराचार्यस्त्वाह (ब्र० सू० भा० अ० २. पा० २. सू० २८) 'शमथविपश्यनायुगनद्धवाही मार्गो योग इति योगलक्षणम् । शमथेति समाधिरुच्यते । विपश्यना सम्यग्दर्शनलक्षणा, यथा युगनद्धौ बलीवर्दौ वहतः तथा यो मार्गः [समाधि]-सम्यग्दर्शनवाही स योगः । तेनाचरतीति योगाचार उच्यत' इति । मध्यमं मार्गमवलम्ब्य प्रवृत्ता माध्यमिका उच्यन्ते । अयं तु मध्यमो मार्ग उक्तो माध्यमिकवृत्तौ—'अतो भावाभावान्तद्वयरहितत्वात् सर्वस्वभावानुत्पत्तिलक्षणा शून्यता मध्यमा प्रतिपत् स मध्यमो मार्ग' इति । (chap. XXIV, p. 185, Calcutta Buddhist texts Society's edition) विद्यारण्यस्वामिनस्तु सर्वदर्शनसङ्ग्रहे वैभाषिकादिपदानां प्रवृत्तौ निमित्तं प्रकारान्तरेण मन्यन्ते—'शिष्यैस्तावत् योगश्चाचारश्चेति द्वयं करणीयम् । तत्राप्राप्तस्य प्राप्तये पर्यनुयोगो योगः । गुरूक्तस्यार्थस्याङ्गीकरणमाचारः । गुरूक्तस्यार्थस्याङ्गीकरणादुत्तमाः । पर्यनुयोगस्याकरणादधमाः । अतस्तेषां माध्यमिका इति प्रसिद्धिः । गुरूक्तभावनाचतुष्टयं बाह्यार्थस्य शून्यत्वं चाङ्गीकृत्याऽऽन्तरस्य शून्यत्वं चाङ्गीकृतं कथमिति पर्यनुयोगस्य करणात्केषाञ्चिद्योगाचारप्रथा' । 'भवन्तश्च सूत्रस्यान्तं पृष्टवन्तः सौत्रान्तिका भवन्त्विति भगवताऽभिहिततया सौत्रान्तिकसंज्ञा सञ्जाता । बाह्येषु गन्धादिष्वान्तरेषु रूपादिस्कन्धेषु सत्स्वपि तत्रानास्थामुत्पादयितुं सर्वं शून्यमिति प्राथमिकान् विनेयानचीकथद्भगवान्, द्वितीयांस्तु विज्ञानमात्रमहाविष्टान् विज्ञानमेवैकं सदिति, तृतीयानुभयं सत्यमित्यास्थितान् विज्ञेयमनुमेयमिति सेयं विरुद्धा भाषेति वर्णयन्तो वैभाषिकाख्यया ख्याता' इति । प्रकारश्चायमर्वाचीनतैर्थिकमुखप्ररूढप्रवादमूलक इति प्रतिभाति । इतोऽपि पूर्वोपदर्शित एव पक्षो ज्यायान् ।

एषां वैभाषिकादीनां मतभेदाच्चतुर्विधे । प्रदर्श्यते दर्शनेऽस्मिन् दिग्भेदस्तत्तदादृतः ॥

सर्वास्तित्ववादिमतसङ्ग्रहः ।

तत्र यस्त्वयं सौत्रान्तिकवैभाषिकाभ्यामभिमतः सर्वास्तित्ववादः स नांशतोऽपि तीर्थिकवादे पदमादधाति । न हि सर्वमस्तीति शब्दमात्रेण भवेदैक्यम् । यस्तु चित्तमात्रमेवेति विज्ञानवादस्तं प्रतिद्वन्द्वीकृत्य ह्ययं शब्दः । तत् कतिपयबाह्यार्थकोडीकरणेनैवायं सर्वशब्दश्चरितार्थः । नापि विवक्षितमतिलङ्घते । विवक्षिताश्च वक्ष्यन्ते । बाह्योऽप्यर्थः परैरिव न चिरानुवृत्तो न वाऽन्यसलक्षणः । न वा नित्यैकहेतुकः । किन्तु क्षणिकः स्वलक्षणः स्वपूर्वपूर्वक्षणलक्षणहेतूपनिबन्धकश्च ।

इदमिहावधेयम्। प्रक्रम्य सर्वास्तित्ववादं प्रस्तोष्यमाणः पदार्थविभागो नात्यन्तं विप्रतीप इतरयोर्वादयोः। न हि स्कन्धायतनादिपदार्थविभागमितरे प्रतिक्षिपन्ति। विज्ञानवादिनो विज्ञानादनन्यताम्, शून्यवादिनः शून्यतामिच्छन्तोऽपि व्यवहृतिपथे सांवृतमिच्छन्ति। तदयमेव पदार्थविभाग इतरयोर्यथासम्भवं बोध्यः।

इदमभिमतं सर्वास्तित्ववादिनाम्। चत्वार्यार्यसत्यानि यद्विज्ञानं निःश्रेयसद्वारम्–दुःखं समुदयो मार्गो निरोधश्चेति। तत्र दुःखं–रूपस्कन्धो वेदनास्कन्धः संज्ञास्कन्धः संस्कारस्कन्धो विज्ञानस्कन्धश्चेति पञ्च स्कन्धाः। रूपाद्येकैकमप्यवान्तरविविधविभागयुक्तमिति स्कन्ध उच्यते। तरोः स्कन्ध इव विततानेकशाखः। तत्रैकादशविधो रूपस्कन्धः। चक्षुः श्रोत्रं घ्राणं जिह्वा कायः रूपं शब्दो गन्धो रसः स्पर्शः अविज्ञप्तिश्चेति। पञ्चेन्द्रियाणि पञ्च विषयाः अविज्ञप्तिः कुशलाकुशलविशेषलक्षणेयमेकेत्येकादशेत्येतत्। यत इयं नाभिव्यज्यते (इन्द्रियैः) सेयमविज्ञप्तिरुच्यते। तथा च वचनम्–"यस्माद्रूपक्रियास्वभावाऽपि सती विज्ञप्तिवत्परं न विज्ञापयति तस्मादविज्ञप्तिरित्यर्थः" [अभिधर्मकोशे प्रथमाध्याये] इति। वाचिकाविज्ञप्तिकर्म कायिकाविज्ञप्तिकर्मेति च कर्मविभागप्रकरणे विभजनाच्च सम्भाव्यते पुण्यापुण्यस्थानीया सेयमविज्ञप्तिरिति। इन्द्रियपञ्चकं विषयपञ्चकं भूतचतुष्टयं चेति रूपस्कन्ध इत्यपरे। वेदनास्कन्धः सुखदुःखोपेक्षात्मना त्रिधा विभिन्नः। संज्ञास्कन्धः–'संज्ञा–निमित्तोद्ग्रहणात्मिका, निमित्तं वस्तुनोऽवस्थितिविशेषो नीलत्वादि, तस्योद्ग्रहणं परिच्छेदः' [अभिधर्मकोशव्याख्या]। स च नीलोऽयमित्यादिः सविकल्पकः प्रत्ययः। चित्तसम्प्रयुक्तचित्तविप्रयुक्तभेदेन द्विविधाः संस्काराः संस्कारस्कन्धः। तत्र प्रथमवर्गे रागद्वेषमानमात्सर्यादीनां बहूनां समावेशः। अपरस्मिन् वर्गे जातिजरामरणादिक्लेशानां समावेशः। तद्विस्तरस्त्वन्यत्र बोध्यः। विज्ञानं मनश्चित्तमित्यनर्थान्तरम्। अयं च विज्ञानस्कन्धः चक्षुर्विज्ञानश्रोत्रविज्ञानघ्राणविज्ञानजिह्वाविज्ञानकायविज्ञानमनोविज्ञानैः षट्शाखः। सेयं पञ्चस्कन्धी तत्त्वदृष्ट्या दुःखपरिणतिर्दुःखमित्यैकराश्येन गण्यते। यश्च विभागः द्वादशायतनानि–चक्षुःश्रोत्रघ्राणजिह्वाकायमन आयतनानि, रूपगन्धशब्दरसस्पर्शधर्मायतनानि चेति। अष्टादश धातवः–चक्षुःश्रोत्रघ्राणजिह्वाकायमनोरूपगन्धशब्दरसस्पर्शधर्मधातवः चक्षुर्विज्ञानश्रोत्रविज्ञानघ्राणविज्ञानजिह्वाविज्ञानकायविज्ञानमनोविज्ञानधातवश्चेति। स च यद्यपि न स्कन्धेभ्यो बहिर्भूतः। अथाऽपि स्वभावविशेषयोगात्तथा विभागः, यथा वैशेषिकेषु द्रव्येष्वेव भूतमूर्तविभुविभागः।

तस्यास्य स्कन्धपञ्चकलक्षणस्य दुःखस्य येन समुदयो भवति स समुदय उच्यते। स द्विधा–हेतूपनिबन्धः प्रत्ययोपनिबन्धश्चेति। हेतुं हेतुं प्रत्ययन्ते हेत्वन्तराणीति तेषामयमानानां यो भावः–समवायः स प्रत्यय उच्यते। हेतूनां समवाय इत्येतत्। अयं च विभागः स्फुटप्रतिपत्तये। तथा चाभिधर्मकोशव्याख्यायाम्—'हेतूनां प्रत्ययानां च कः प्रतिविशेषः?। न कश्चिदित्याह–उक्तं हि भगवता द्वौ हेतू द्वौ प्रत्ययौ सम्यग्दृष्टेरुत्पादाय......हेतुः प्रत्ययो निदानं कारणं निमित्तं लिङ्गमुपनिषदिति पर्याया' इति। तत्र बाह्योऽयं हेतूपनिबन्धः–बीजादङ्कुरमङ्कुरात्पत्रं पत्रात्काण्डं काण्डान्नालं नालाद्गर्भो गर्भाच्छूकः शूकात्पुष्पं पुष्पात्फलमिति। असति बीजेऽङ्कुरो न भवति। यावदसति पुष्पे फलं न भवति, सति तु बीजेऽङ्कुरस्यापि निर्वृत्तिर्भवति। एवं यावत् सति तु पुष्पे फलस्याभिनिर्वृत्तिर्भवति। अस्मिन् हेतूपनिबन्धे बीजादौ न कस्याप्यहमिदं निर्वर्तयामीति भवत्यभिसन्धिः। न चैकस्य निर्वर्त्यस्याङ्कुरादेर्भवत्यनेनाहं निर्वर्तित इति। सति बीजादावङ्कुरादि। अयं तु प्रत्ययोपनिबन्धो बाह्यस्य यः

पृथिव्यादिधातुसमवायः। तत्र पृथिवीधातुर्बीजस्य संधारणकृत्यं करोति। अब्धातुर्बीजं स्नेहयति। तेजोधातुर्बीजं परिपाचयति। वायुधातुर्बीजमभिनिर्हरति। एषैकोऽपि यदा विकलो भवति न तदा बीजादङ्कुरस्याभिनिर्वृत्तिर्भवति। समवाये चैषां बीजे निरुध्यमानेऽङ्कुरस्याभिनिर्वृत्तिर्भवति। नैकस्यान्येषु भवत्यहमिदं कृत्यमस्य बीजस्य करोमीति, अस्य वाऽङ्कुरस्य न भवत्ययमेभिः प्रत्ययैर्निर्वर्तित इति। तदयमङ्कुरादिः प्रतीत्यसमुत्पादः। यत् प्रतीत्य प्राप्य कारणं सपदि समुत्पद्यते केवलम्, न चेतयितारमपेक्षते न वाऽयमहमेतेनाभिनिर्वर्तित इति चेतयते। विशेषश्चैव तीर्थिकाभिमतात्। अयमपरश्च विशेषः। स भावो नास्ति यः प्रतीत्यसमुत्पादो न स्यात्। क्षणिकाश्च सर्वे भावाः। अध्यात्ममयं हेतूपनिबन्धः अविद्या-संस्कार-विज्ञान-नामरूप-षडायतन-स्पर्श-वेदना-तृष्णा-उपादान-भव-जात्यादिः। तत्र उत्तराः पूर्वपूर्वप्रत्ययाः। यथा—अप्रतिपत्तिरन्यथाप्रतिपत्तिरविद्या, सत्यां चाविद्यायां पुण्योपगादयस्त्रिविधाः संस्कारा भवन्ति। त एतेऽविद्याप्रत्ययाः संस्काराः। त्रिविधैः संस्कारैस्त्रिविधं विज्ञानं भवति तत् संस्कारप्रत्ययं विज्ञानम्। विज्ञानेन नामरूपं भवति तद्विज्ञानप्रत्ययम्। नामरूपात् षडायतनं भवति तन्नामरूपप्रत्ययम्। तेन स्पर्शः स तत्प्रत्ययः। तेन स्पर्शेन वेदना सुखादिलक्षणा, सा वेदना स्पर्शप्रत्यया। वेदनया तया भवति तृष्णा ममेदं सुखं साध्यमित्यध्यवसायलक्षणा। सेयं तृष्णा वेदनाप्रत्यया। तृष्णया च तया भवत्युपादानमपरित्यागलक्षणम्-मा भवतु विप्रयोगः प्रियसातरूपैरिति भूयो भूयः-प्रार्थनात्मकम्, तदिदमुपादानं तृष्णाप्रत्ययम्। एवं प्रार्थयमाने पुनर्भवजनकं कर्म समुत्थाप्यते कायेन वाचा मनसा वा, तद्भव उच्यते। सोऽयमुपादानप्रत्ययः। तेन भवेन स्कन्धानामभिनिर्वृत्तिर्भवति, सेयं जातिर्भवप्रत्यया। जात्याऽभिनिर्वृत्तानां स्कन्धानामुपचयपरिपाकाद्यो विनाशः स जरामरणमुच्यते। जातिप्रत्ययं चैतत्। बाह्य इवाध्यात्मं प्रत्ययोपनिबन्धः पृथिव्यादिधातूनां विज्ञानधातुनैकेनाधिक्यं गतानां समवायो बोध्यः। न चेह हेतोर्जात्यादेः प्रत्ययस्य वा विज्ञानस्कन्धादेरहमिदमस्य कृत्यमभिनिर्वर्तयामीति भवत्यभिसन्धिः। न वाऽभिनिर्वर्त्यस्य संस्कारादेर्भवत्यहमनेनाभिनिर्वर्तितोऽस्मीत्यभिसन्धिः। तदयं भवति प्रतीत्यसमुत्पादः। तस्यास्य स्कन्धपञ्चकस्य हेतूपनिपातः समुदयः।

यो निरोधो दुःखस्यास्य स निरोधसत्यम्। प्रतिसङ्ख्यानिरोधाप्रतिसङ्ख्यानिरोधभेदेन द्विधाऽभिमतयोर्निरोधयोः प्रतिसङ्ख्यानिरोधकोटावनुप्रविशतीदं निर्वाणलक्षणं निरोधसत्यम्। यस्य द्वारं मार्गसत्यं चतुर्थमुच्यते।

स चायमष्टाङ्गो मार्गः—सम्यग्दृष्टिः सम्यक्सङ्कल्पः सम्यग्वाक् सम्यक्कर्मान्तः सम्यगाजीवः सम्यग्व्यवसायः सम्यक्स्मृतिः सम्यक्समाधिश्चेति। तत्र सम्यग्दृष्टिः—दुःखतद्धेतुतन्निरोधमार्गाणां याथातथ्येन दर्शनम्। सम्यक्सङ्कल्पः—विषयवैमुख्ये परहिताधानादिषु च सङ्कल्पः। सम्यग्वाचा मृषावादपैशुन्यपारुष्यादिरहितं भाषणम्। सम्यक्कर्मान्तः—प्राणातिपातादत्तादानकाममिथ्याचारप्रत्यनीकं सत्कर्म। सम्यगाजीवः—परानभिद्रोहं जीवनम्। सम्यग्व्यवसायः—विहिताधानप्रतिषिद्धवर्जनयोर्दृढोऽध्यवसायः। सम्यक्स्मृतिः—यया स्मृत्या न भवेन्मनस्यकुशलानामवकाशः कुशलानामेव तु स्यात्, सेयं सम्यक्स्मृतिः। सम्यक्समाधिः—चित्तसंप्रतिरोधः समाधिः, कामादिवितर्कपवनैरप्रकम्प्यतापादनमेकाग्रतापादनं च सम्यक्स्मरणादिषु सम्यक्समाधिरुच्यते।

स्कन्धायतनधातूनां दुःखानां प्रत्ययस्य च। निरोधमार्गयोश्चेत्थं भेदः सङ्क्षिप्य दर्शितः॥

अपरश्चायं भवति विभागक्रमः । यस्मिन्नेषां प्रकारान्तरेण भवत्यन्तःपातः । यथा–संस्कृतो धर्मः असंस्कृतश्च । यस्योत्पादादि स धर्मः संस्कृतो धर्म उच्यते । स च रूपचित्तचैत्तचित्तविप्रयुक्तभेदाच्चतुर्धा । यो रूपस्कन्ध एकादशप्रकारः सोऽयं रूपधर्मः । सर्वेषां चैत्तधर्माणामास्थानमहङ्कारकं चित्तमुच्यते । स चित्ताख्यो धर्मः । चैत्ताश्च धर्माश्चित्तसम्प्रयुक्तसंस्कारा उच्यन्ते । येषां च शाखाः समासतः–महाभूमिकाधर्म, कुशलमहाभूमिकाधर्म, क्लेशमहाभूमिकाधर्म, अकुशलमहाभूमिकाधर्म, उपक्लेशमहाभूमिकाधर्म, अनियतमहाभूमिकाधर्मभेदेन षोढा । अनयोश्चित्तचैत्तधर्मयोर्यथायथं विज्ञानस्कन्धस्य संस्कारस्कन्धैकांशस्य च समावेशः । समुदायमार्गयोस्तु समावेशो यथायथं रूपचित्तचैत्तेषु बोध्यः । असंस्कृतस्त्रेधा–आकाशम्, प्रतिसङ्ख्यानिरोधो, अप्रतिसङ्ख्यानिरोधश्चेति । निरोधसत्यस्यास्मिन्नसंस्कृते समावेशः ।

माध्यमिकमत-संग्रहः ।

सर्वशून्यवादिनो माध्यमिकाः पुनरेवं मन्यन्ते यद्यप्ययं स्कन्धायतनधातुविभेदः प्रदृश्यते नाम । तथाऽपि सांवृत एवायम् । संवृत्या–आवरणेन मायया कल्पितोऽयं भेदव्यवहारः ।

"अलातचक्रनिर्माणस्वप्नमायाम्बुचन्द्रकैः । धूमिकान्तःप्रतिश्रुत्कामरीच्यभ्रैः समो भवः" ॥

[ चतुःशतिका–३०० ]

"फेनपिण्डोपमं रूपं वेदना बुद्बुदोपमा ।
मरीचिसदृशी संज्ञा संस्काराः कदलीनिभाः ॥
मायोपमं च विज्ञानमुक्तमादित्यबन्धुना" ॥

[ माध्य० पृ० १० ]

न च प्रदृश्यत इत्येतावता परमार्थता—

"इन्द्रियैरुपलब्धं यत्तत्तत्त्वेन भवेद्यदि । जातास्तत्त्वविदो बालास्तत्त्वज्ञानेन किं फलम्" ॥

[ बोधि० पं–३७५ ]

यश्चादेशो भगवतो बुद्धस्य–'सर्वं सर्वमिति ब्राह्मण यावदेव पञ्च स्कन्धा द्वादशायतनान्यष्टादश धातव' इति । स तु लोकावतारणाय ।

"लोकावतारणार्थं च भावा नाथेन देशिताः । तत्त्वतः क्षणिका नैते–" ॥

[ बोधि० पं–३७६ । ]

"ममेत्यहमिति प्रोक्तं यथा कार्यवशाज्जिनैः । तथा कार्यवशात्प्रोक्ताः स्कन्धायतनधातवः" ॥

[ बोधि० पं–३७६ ]

अयं च लोकानामवतारणक्रमः । स्कन्धायतनाद्युपदेशेन नास्तिक्यबुद्धेरनर्थपथादवतारणम् । तेषां प्रतीत्यसमुत्पादतत्त्वोपदेशेन क्षणिकत्वैकान्तेन तदभिषङ्गदोषावहात् तत्स्थैर्यमोहादवतारणम् । प्रतीत्यसमुत्पादस्वरूपविमर्शाधानेन शून्यतायामवतारणम् ।

कथं प्रतीत्यसमुत्पादाः शून्याः स्युः ? । अतत्त्वदृष्टेः प्रतीत्यसमुत्पादा नाम, तत्त्वदृष्टेस्तु शून्या एव ।

"न स्वतो नापि परतो न द्वाभ्यां नाप्यहेतुतः । उत्पन्ना जातु विद्यन्ते भावाः क्वचन केचन" ॥

[ माध्य० ४ । ]

ननु—न स्वतो भवन्ति, परतस्तु भवन्ति ।

"चत्वारः प्रत्यया हेतुरालम्बनमनन्तरम् । तथैवाधिपतेयं च" ॥

[ माध्य० २० ]

नैतदुपपद्यते । घटेत नाम तदा परेभ्यो भावानामुत्पादः । यदि प्रत्ययेषु परेषु भावानामुत्पादात्पूर्वं सत्त्वं स्यात्,

"न हि स्वभावो भावानां प्रत्ययादिषु विद्यते । अविद्यमाने स्वभावे परभावो न विद्यते" ॥

[ माध्य० २० ]

किञ्च–विद्यमानयोर्द्वयोरेव हि स्वपरविभागः । न च घटेत यौगपद्यं बीजाङ्कुरयोः ।

"न हि स्वभावो भावानां प्रत्ययादिषु ( सत्स्वेव ) विद्यते ।

अविद्यमाने स्वे भावे परभावो न विद्यते" ॥

तत्परेभ्य उत्पाद इत्यसम्बद्धं वचः । किञ्च—

"नैवासतो नैव सतः प्रत्ययोऽर्थस्य युज्यते । असतः प्रत्ययः कस्य सतश्च प्रत्ययेन किम्" ॥

[ माध्य० २२ ]

किञ्च–यदि निर्वर्त्यो धर्मो निर्वर्तेत । अस्यायं निर्वर्तक इति भवेद्धेतुहेतुमद्विभागः ।

"न सन्नासन्न सदसन् धर्मो निर्वर्तते यदा । कथं निर्वर्तको हेतुः" ॥

[ माध्य० २२ ]

न हि सतो विद्यमानस्य निर्वर्तनम् । नाप्यसतोऽविद्यमानस्य निर्वर्तनं घटेत । नोभयात्मनः । परस्परविरोधात् । तस्मादविचारयतामापातसिद्धोऽयं प्रत्ययप्रत्ययिविभागो गन्धर्वनगरवत् । ये चामी स्कन्धादयः संस्कृतलक्षणा उच्यन्ते तेऽपि विचार्यमाणा निःस्वभावा एव भवन्ति । कैः स्वभावैरिमे संस्कृतलक्षणा उच्यन्ते ? । उत्पादेन स्थित्या भङ्गेन चेति चेत्,

सोऽयमुत्पादः किं संस्कृत उतासंस्कृतः ? । 'यदि संस्कृत उत्पादस्तत्र युक्ता[2] त्रिलक्षणी[3]' ।

[ माध्य० ४४ ]

यद्युत्पादस्योत्पादप्रसङ्गपरिहाराय—

'अथासंस्कृत उत्पादः ( इष्यते ) कथं संस्कृतलक्षणम्' ।

[ माध्य० ४४ ]

आकाशवदसंस्कृतस्य कथं संस्कृतस्वभावता । किञ्च–

यथा यथा संस्कृतस्वभावतया प्रतीयमाना उत्पादस्थितिभङ्गा विचार्यन्ते तथा तथा विशीर्यन्ते नाम ।

"निरुध्यमानस्योत्पत्तिर्न भावस्योपपद्यते । यश्चानिरुध्यमानस्तु स भावो नोपपद्यते" ॥

[ माध्य० ५२ ]

---

१ परेभ्यो भाव उत्पादः परभावः ।

२ युक्ता–स्यादिति शेषः ।

३ त्रिलक्षणी–उत्पादस्थितिभङ्गाः ।

निरुध्यमानो हि विद्यमानः । तस्य कथमुत्पत्तिः ? । यथानिरुध्यमानस्य खपुष्पायमाणो भावो नोपपद्यते । ईदृशः कथं स्वभावो भवितुमर्हति ? ।

तदेवम्—

"स्थितिर्निरुध्यमानस्य न भावस्योपपद्यते । यथानिरुध्यमानस्तु स भावो नोपपद्यते ॥ निरुध्यते नानिरुद्धं न निरुद्धं निरुध्यते । तथा निरुध्यमानं च" ।

[ माध्य० ५२-५३ ]

"उत्पादस्थितिभङ्गानामसिद्धेर्नास्ति संस्कृतम् । संस्कृतस्याप्रसिद्धौ च कथं सेत्स्यत्यसंस्कृतम्" ॥

[ माध्य० ५६ ]

तस्मात्—

"यथा माया यथा स्वप्नो गन्धर्वनगरं यथा । तथोत्पादस्तथा स्थानं तथा भङ्ग उदाहृतः" ॥

[ माध्य० ५७ ]

उक्तं च—

"यथा कुमारी सुपिनान्तरस्मिन् सा पुत्रजातं च मृतं च पश्यति ।
सतोऽतितुष्टा मृतिदौर्मनःस्थिता तथोपमान् जानत सर्वधर्मान् ॥
यथैव गन्धर्वपुरं मरीचिका यथैव माया सुपिनं यथैव ।
स्वभावशून्या तु निमित्तभावना तथोपमान् जानत सर्वधर्मान् ॥
संस्कृत असंस्कृतसर्वविविक्ता नास्ति विकल्पन तेषमृषीणम् ।
सर्वगतेषु असंस्कृत प्राप्ता दृष्टिगते हि सदैव विविक्ता" ॥

[ माध्य० वृ० ५७ ]

नन्वस्ति प्रवचनसिद्धमेतत्—

"दर्शनं श्रवणं घ्राणं रसनं स्पर्शनं मनः । इन्द्रियाणि, षडेतेषां द्रष्टव्यादीनि गोचरः" ॥

[ माध्य० ३२ ]

नैतदुपपन्नम् । किं दर्शनेन्द्रियमात्मानं पश्यति ? ।

"स्वमात्मानं दर्शनं हि तत्तमेव न पश्यति । न पश्यति यदाऽऽत्मानं कथं द्रक्ष्यति तत्परान्" ॥

[ माध्य० ३२ ]

किञ्च–पश्यतीति हि दर्शनमुच्यते। तेन दृशिक्रियायोगश्चक्षुषः प्रत्याख्यते। स च दृशिक्रियायोगो दर्शनस्वभावस्य वा चक्षुषः, अतत्स्वभावस्य वा, दर्शनस्वभावं तु तत् दृशिक्रियायुक्तमेवेति पश्यतीति भूयो दृशिक्रियान्वययोगस्तत्र नोपपद्यते । अतत्स्वभावे तु न तदन्वयः सुतराम् । तस्मात्—

"पश्यति दर्शनं नैव नैव पश्यत्यदर्शनम् । दर्शनं पश्यतीत्येवं कथमेतत्तु युज्यते" ॥

[ माध्य० ३३ ]

"व्याख्यातो दर्शनेनैव द्रष्टा चापि तथा हि—

[ माध्य० ३४ ]

"स्वमात्मानं नैव दृष्टा दर्शनेन विपश्यति । न पश्यति यदाऽऽत्मानं कथं द्रक्ष्यति तत्परान्"॥
[ माध्य० ३४ ]

यथायम्—

"प्रतीत्य मातापितरौ यथोक्तः पुत्रसम्भवः । चक्षूरूपे प्रतीत्यैवमुक्तो विज्ञानसम्भवः" ॥
[ माध्य० ३४ ]

स च नोपपद्यते । तथाहि—

"द्रष्टव्यदर्शनाभावाद्विज्ञानादिचतुष्टयम् । नास्ति"
[ माध्य० ३४ ]

"व्याख्यातं दर्शनं घ्राणं रसनं स्पर्शनं मनः । दर्शनेनैव जानीयात् श्रोतृश्रोतव्यकादि च" ॥
[ माध्य० ३५ ]

उक्तं हि भगवता बुद्धेन—

"न चक्षुः प्रेक्षते रूपं मनो धर्मान्न वेत्ति च । एतत्तु परमं सत्यं यत्र लोको न गाहते ॥
सामग्र्या दर्शनं यत्र प्रकाशयति नायकः । प्राहोपचारभूमिं तां परमार्थस्य बुद्धिमान्" ॥
[ माध्य० वृ० ३५ ]

यदपि भगवतो वचनम्–'अविद्यानुगतोऽयं भिक्षवः पुरुषपुद्गलः पुण्यानपि संस्कारानभिसंस्करोति अपुण्यानपि संस्कारानभिसंस्करोती'ति, तदपि क्रमेण विनेयजनावतारणाय । एतेन–अस्ति वस्तुतो विज्ञानादि, येनायं कर्मकारकव्यपदेश उपपद्यते, असति कथमिदं घटेत, न हि कूर्मरोमभिः प्रावरणमित्यपास्तम् । यस्मात्—

"सद्भूतः कारकः कर्म सद्भूतं न करोत्ययम् । सद्भूतस्य क्रिया नास्ति कर्म च स्यादकर्तृकम् ॥
सद्भूतस्य क्रिया नास्ति कर्ता च स्यादकर्मकः । कारको नाप्यसद्भूतः कर्मासद्भावमीहते ॥
करोति यद्यसद्भूतोऽसद्भूतं कर्म कारकः । अहेतुकं भवेत्कार्यं कर्ता चाहेतुको भवेत् ॥
हेतावसति कार्यं च करणं च न विद्यते । तदभावे क्रिया कर्ता करणं च न विद्यते ॥
कारकः सदसद्भूतः सदसत्कुरुते न तत् । परस्परविरुद्धं हि सच्चासच्चैकतः कुतः" ॥
[ माध्य० ५८–६० ]

न चैतावता मन्तव्यं भावा न सन्तीत्येतदेषां मतमिति ।

न वयमवधारयामो न भावाः सन्तीति, प्रतीत्य समुत्पन्नान् बालैरयमेवमिति विकल्प्यमानान् न वयमयमेवमित्युपलभामहे । न नो नास्तीति प्रतिषेधे प्रवृत्तिः । यो ह्ययमेवमस्तीति विकल्पयति, तस्यैव ह्ययमिह नास्तीति विकल्पः ।

"मरीचिं तोयमित्येतदिति मत्वा गतोऽत्र सन् । यदि नास्तीति तत्तोयं गृह्णीयान्मूढ एव सः ॥
मरीचिप्रतिमं लोकमेवमस्तीति गृह्णतः । नास्तीति चापि मोहोऽयं सति मोहे न युज्यते" ॥
[ माध्य० वृ० ६१ ]

नैरात्म्यामृतमेतत्तु विचारमथनोद्भवम् । विकल्पगरलोदग्रव्यामोहापहमद्भुतम् ॥

मरीचिकाजलकल्पानामेषां सांवृतानामिदंप्रत्ययतामात्राभ्युपगमेन तु प्रसिद्धिर्नान्यथा। आह च—

"प्रतीत्य कारकः कर्म तं प्रतीत्य च कारकम्। कर्म प्रवर्तते नान्यत्पश्यामः सिद्धिकारणम्"॥

[ माध्य० का० ६२ ]

तस्मात्तत्त्वविचारकुशलैर्विचार्यमाणाः सर्वे एव भावा निःस्वभावा अविद्यातिमिरोपहतमतिनयनानां बालकानां भासमानाः कर्त्ता कर्म, गन्ता गम्यं, हेतुः कार्यं, द्रष्टा दृश्यमिति परस्परसापेक्षतामात्रेण प्रसिद्धिमुपगता गन्धर्वनगरायन्ते। उक्तं च—

"बुद्ध्यां विविच्यमानानां स्वभावो नावधार्यते। अतो निरभिलप्यास्ते निःस्वभावाश्च कीर्तिताः॥

इदं वस्तुबलायातं यद्वदन्ति विपश्चितः। यथा यथाऽर्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथा"॥

[ सर्व० १२ ]

तत् सिद्धम्—

"अलातचक्रनिर्माणस्वप्नमायाम्बुचन्द्रकैः। धूमिकान्तःप्रतिश्रुत्कामरीच्यभ्रैः समो भवः"॥ इति।

एवं च निःस्वभावतैव भावानां पारमार्थिकं रूपम्—

"निःस्वभावा अमी भावास्तत्त्वतः स्वपरोदिताः। एकानेकस्वभावेन वियोगात्प्रतिबिम्बवत्"॥

निःस्वभावा इत्यनेनोपदेशेन नाभिनिवेशः कार्योऽभावे। भावाभिनिवेश इवाभावाभिनिवेशोऽप्यभिनिवेश इति मालिन्यमेव चित्तस्य। न ह्यभावाभिनिवेश इति कश्चिद्विशेषः। भावमपेक्ष्य ह्यभावः प्रवर्तते। भावश्चेत्कल्पना, अभावोऽपि कल्पनैव। तद्भाव इवाभावेऽपि। कल्पनामात्रेऽभिनिवेशोऽनुचित एव।

"शून्यता सर्वदृष्टीनां प्रोक्ता निःसरणं जिनैः। येषां तु शून्यतादृष्टिस्तानसाध्यान् बभाषिरे"॥

[ बोधि० प० ४१४ ]

यस्तु भावप्रतिषेधरूपः, स निरुपाख्यः खपुष्पकोटिमधिनिविशति। असति भावस्यैव स्वभावे तत्प्रतिषेधस्य कः स्वभावः स्यात्। यस्मिन्नभिनिवेशः शोभेत। तत् भाव इवाभावो न कश्चित्, अत एव तदुभयात्मा सङ्कीर्णस्वभावोऽपि न कश्चित्। अत एव तदुभयप्रतिषेधात्माऽपि। भावविकल्पनिबन्धना ह्यन्ये विकल्पाः। तस्मात्—

"न सन्नासन्न सदसन्न चाप्यनुभयात्मकम्। चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका जगुः"॥

[ सर्वदर्शन० सं० ]

इदमेव परमार्थसत्यं यच्चतुष्कोटिविनिर्मुक्तम्, यन्नैरात्म्यं सर्वभावानाम्। भावाश्च स्कन्धायतनादयः सांवृतं सत्यम्। संवृतिः—अविद्या। यथा भूतस्यावरणादयथाभूतस्य प्रकाशनाच्च संवृतिरुच्यते उक्तं बोधिचर्यावतारपञ्जिकायाम् ३५२ च—

"अभूतं ख्यापयत्यर्थं भूतमावृत्य वर्तते। अविद्या जायमानेव कामलातङ्कवृत्तिवत्"॥ इति।

अविद्या मोहो विपर्यास इति पर्यायाः। अनयाऽवभास्यमानं संवृतिसत्यमुच्यते। ननु—अविद्यावभासः सत्यमिति च विरुद्धम्। सत्यम्। अथाप्यवितथं रूपं लोकस्येति संवृतिसत्यमुच्यते। यच्च परमार्थसत्यं तस्य द्वारं भवति सांवृतमपि व्यवहारत उपदेशाय प्रभवत्, इत्यतश्च सांवृतमपि सत्यमुच्यते।

"व्यवहारमनाश्रित्य परमार्थो न देश्यते। परमार्थमनागम्य निर्वाणं नाधिगम्यते" ॥ [ बोधि० प० ३६५ ]

अनूदितं च बोधिचर्यावतारपञ्जिकायाम् [ ३७२ ]—

"उपायभूतं व्यवहारसत्यं उपेयभूतं परमार्थसत्यम्" । इति ।

संवृतिमपेक्ष्यैव तु परमार्थस्वरूपं कथञ्चिदुपदेशपदमाविशति। न हीदमित्थमित्यस्योपदेशो भवति, किन्तु नेति नेत्येव । केशोण्डुकादीनि तिमिरोपहतनयनैर्दृश्यमानान्यतदुपहतनयनैरिवाविद्योपप्लुतचित्तैर्बालैर्दृश्यमानानि स्कन्धायतनादीन्यतदुपप्लुतैर्बुद्धैर्नैतानि, नैवंविधानीति प्रतिषिध्यन्ते केवलम् । नैतावता कानिचिद्विहितानि न वा प्रतिषिद्धानि । कल्पितस्य कल्पनात्वज्ञापकमात्रेण कुत्र किं प्रतिषिद्धम् ? । किं वा वस्तुगत्या प्रतिषेधार्हम् ? । वस्तुतः कश्चित्सतोऽन्यत्र । प्रतिषेधैः प्रतिषेधोऽर्थवान् स्यात् । तत्परमार्थतत्त्वं न प्रकारान्तरेणोपदेशपदं भवितुमर्हति । तथा चानूदितं बोधिचर्यावतारपञ्जिकायाम्—

"अनक्षरस्य धर्मस्य श्रुतिः का देशना च का । श्रूयते देश्यते चार्थः समारोपादनक्षरः" ॥
[ बोधि० प० ३६५ ]

इदं चात्रानूदितं तत्रैव—'यः पुनः परमार्थः सोऽनभिलप्यः अनाज्ञेयः अपरिज्ञेयः अविज्ञेयः अदेशितः अप्रकाशितः यावदविक्रियः अकारणः यावन्न लाभो नालाभो न सुखं न दुःखं न यशो नायशो न रूपं नारूपमि'ति ।

एतेन इयमपि शङ्का मन्दानामपास्ता । सर्वेषां भावानां शून्यतामुपपादयतः शून्यतया स्वभावेन सर्वे भावाः सस्वभावाः स्युरिति । न हि शून्यता नाम भावेभ्यो भिन्नो धर्मः, येन स्वभाववत्त्वमेषामापतेत् । शून्यता तु भाव एव । उक्तं हि प्रज्ञापारमितायाम्—'न रूपशून्यतया रूपं शून्यम् । रूपमेव शून्यम् । शून्यतैव रूपम् । न वेदनाशून्यतया वेदना शून्या । वेदनैव शून्या । शून्यतैव वेदना । न संज्ञाशून्यतया संज्ञा शून्या । संज्ञैव शून्या । शून्यतैव संज्ञा । न संस्कारशून्यतया संस्काराः शून्याः । संस्कारा एव तु शून्याः । शून्यतैव तु संस्काराः । न विज्ञानशून्यतया विज्ञानं शून्यम् । विज्ञानमेव तु शून्यम् । शून्यतैव विज्ञानम्" । इति । [ बोधि० प० ४१६ ]

अनेन प्रकारेण सर्वशून्यतां पश्यत एव निर्वाणम् । अपुनरुत्पादं दुःखानामुपशमो हि निर्वाणम् । अनुच्छिन्ने दुःखबीजे स न सिद्ध्येत् । संक्षेपतः पञ्चोपादानस्कन्धोपादानात्मकस्य जातिव्याधिजरामरणस्वभावस्य दुःखस्य सर्वस्य बीजमविद्या हि । सा च मायामयेषु भावदृष्टिलक्षणा विपर्यासदृष्टिः प्रणश्यति शून्यतादृष्ट्या । इयमेव प्रज्ञोच्यते । सेयं श्रुतचिन्ताभावनामयी क्रमेणाभ्यासात्प्रवृद्धिमुपगता प्रज्ञापारमितोच्यते । दानपारमिताशीलपारमिताक्षान्तिपारमितावीर्यपारमिताध्यानपारमिताभिरियं क्रमात्प्रवृत्ताभिः सुदृढमूला अवशगा च माराणां प्रभवति सकलकल्पनाजालविगताय सम्यक्सम्बुद्धत्वाय । सम्यक्सम्बुद्धत्वमेव तु बुद्धत्वम् । सम्यक्सम्बुद्धत्वाय प्रज्ञापारमितायां प्रवृत्तस्तु न केवलमात्मनो दुःखप्रशमनाय यतते किन्तु सकलप्राणिदुःखप्रशमनाय । यस्तु स्वदुःखोपशमनाय प्रयतते स तु परिमितसम्भारः । यतस्य लेशतोऽनुवर्तते स्वपरविभागः । स्वपरविभागमपश्यंस्तु परदुःखैरपि दुःखी भवेत् । हन्तायमतिदुःखी ! किं ततः ? । हेयं हि तत् । न । कृपया तु भवदुपादेयम् । यदिदं दुःखापनोदनोपाये प्रवर्तयद्भवति कल्याणाय । संयोगवियोगप्रभवं तु दुःखं बन्धाय । उक्तं च बोधिचर्यायाम्—[ १३८ ]

"बहूनामेकदुःखेन यदि दुःखं विगच्छति । उत्पाद्यमेव तद्दुःखं सदयेन परात्मनोः ॥" इति ।

विरलः स बोधिचित्तो यः कल्याणमित्रं पुरुषः समस्तसत्त्वदुःखैर्दुःखी निःशेषसकलप्राणि-दुःखोन्मूलनं कुर्वंस्तदुपायभूतामनुत्तरां सम्यक्सम्बोधिं प्राप्तुमाहितचित्तस्तदुपायभूतपुण्यसम्भारज्ञान-सम्भारसम्पादनाय दानपारमितादिकं सेवते। दानादिपारमितास्वरूपविवेकः शिक्षासमुच्चये प्रपञ्चितः। प्रज्ञयोपसंस्कृतमेव तु दानादिपारमितापदमर्हति, निर्वाणसाधनपरिकरतां च। विना प्रज्ञया कृतं तु दानादि केवलं लोकगतावेवोपयुज्येत। प्रज्ञोपसंस्कृतैस्तु तैः प्रज्ञापारमिता क्रमेण प्रचयमुपगच्छन्ती परिनिष्पद्यते। उक्तंच बोधिचर्यावतारपञ्जिकायाम्—'एवमेते दानादयः संस्कृत्य सम्भृता अपि प्रज्ञामन्तरेण सौगतपदाधिगमहेतवो न भवन्ति। नापि पारमिताव्यपदेशं लभन्ते। प्रज्ञाकृतपरिशुद्धि-भाजः पुनरव्याहतोदारप्रवृत्तितया तदनुकूलमनुवर्तमानास्तद्धेतुभावमधिगच्छन्ति। पारमितानामधेयं च लभन्ते' इति। सेयं दानपारमितादिपरिकरोपेता प्रज्ञापारमिता महायानम्। इमामारूढो बोधिचित्तो महायानमारूढो माहायानिकः। यदयं सकलसत्त्वदुःखोन्मूलनाय बोधौ चित्तमाधाय प्रज्ञापारमितां सर्व-सत्त्वसन्तरणनौकामाश्रयते। ये पुनः परिमितसम्भाराः कृपाविरहात् केवलं स्वदुःखोपशमनाय प्रवृत्ता-स्तेषां यद्यानं श्रावकयानप्रत्येकबुद्धयानभेदेन द्विविधं तदेतदृष्ट्या हीनं यानम्। एते पुनः करुणैकमित्राः प्राप्य प्रज्ञापारमितां सपरिकरामधिगतबोधिसत्त्वपदाः परदुःखोच्छेदनत एव प्रमुदिताः समधिगतबुद्धभावा नापरं निर्वाणमाकाङ्क्षन्ते माहायानिकाः। उदाहृतं चात्र वचनं शान्तिदेवेन—

'मुच्यमानेषु सत्त्वेषु ये ते प्रामोद्यसागराः। तैरेव ननु पर्याप्तं मोक्षेणारसिकेन किम्॥' इति।

[बोधिच० ३४१]

सति हि स्वपरभेदे परदुःखापनोदनात् स्वदुःखापनोदनस्य प्रथमतः प्राप्तिः। तत्त्वदृष्टौ तु नायं विभेदः—

"सन्तानः समुदायश्च पङ्क्तिसेनादिवन्मृषा। यस्य दुःखं स नास्त्यस्मात् कस्य दुःखं भविष्यति॥
अस्वामिकानि दुःखानि सर्वाण्येवाविशेषतः। दुःखत्वादेव वार्याणि नियमस्तत्र किंकृतः॥"

[बोधिच० ३३४।३३६]

"अहमेव तदापीति मिथ्येयं परिकल्पना। अन्य एव मृतो यस्मादन्य एव प्रजायते॥
यदि यस्यैव यद्दुःखं रक्ष्यं तस्यैव तन्मतम्। पाददुःखं न हस्तस्य कस्मात्तत्तेन रक्ष्यते॥"

[बोधिच० ३३२।३३३]

"तद्दुःखेन न मे बाधेत्यतो यदि न रक्ष्यते। नागामिकाय दुःखान्मे बाधेत्येवं विचिन्त्यताम्॥"

[बो० ३३१]

"यदा स्वस्य परेषां च भयं दुःखं च न प्रियम्। तदाऽऽत्मनः को विशेषो यत्तं रक्षति नेतरम्॥"

[बो० ३३०]

नचैते परदुःखोन्मूलनाय संसारमधितिष्ठन्तोऽपि संसारदोषैर्लिप्यन्ते। शून्यतादर्शनलक्षणप्रज्ञा-पारमितानिष्ठा ह्येते। शून्यतां भावयतां क्व कुतो लेपः। अप्रतिनिष्ठितनिर्वाणता तु शून्यतायाः फलम्। सर्वतः समुत्तुङ्गं निर्वाणसौधमधिरूढा नामैते ये बोधिचित्तेष्वपि समतिलङ्घ्य मारान् समतिलङ्घ्य च सकृदागाम्यनागामिपदनिपातं प्राप्य बोधिसत्त्वपदं सम्यक्सम्बुद्धिसमुन्मूलितनिखिलविकल्पजालाः

समधिगतबुद्धभावाः संस्तुतावेव परेषां श्रेयसे निर्वाणाविशेषमवतिष्ठन्ते । उपरतसकलविकल्पानां परार्था उपदेशाः कथं स्युरिति नाशङ्क्यम् । कुलालचक्रभ्रमणन्यायेन पूर्वप्रणिधानवशात्तदुपपत्तेः । बोधिचर्यावतारादिष्वयमर्थो व्याख्यातः । बोध्यर्थं प्रवृत्तस्य महायानमारूढस्य पदेपदे प्रसजतां मूलापत्तिभेदानां स्वरूपं, मारभेदानां स्वरूपं, तत्प्रतिरोधकोपायानां स्वरूपं, सपदि महायानमारोढुमसमर्थस्य बोधिं प्रार्थयमानस्य बोधिप्रणिधिचित्तस्य स्वरूपं, तस्य साधनप्रकारभेदश्चेत्याद्यनेकमिह वक्तव्यम् । अनवसरोऽयं विस्तरस्येति विरम्यते ।

उद्योतकरभट्टाद्यैः प्रास्तास्तर्कशराः शिताः । मन्ये पतन्त्यनाविध्य शून्यवादवियत्तलम् ॥

विज्ञानवादिनस्त्वेवं मन्यन्ते—

**विज्ञानवादिमत-सङ्ग्रहः ।**

द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना ।
बाह्योऽर्थः सांवृतं सत्यं चित्तमेकमसांवृतम् ॥

बाह्यरूपतयाऽभाति तच्चित्तं परमार्थसत् । संवृतिग्राहि किंवाऽन्यद्यदि चित्तं च सांवृतम् ॥
जगदान्ध्यं प्रसज्येत तस्मात्तन्मात्रमिष्यते । तत्तु चित्तं स्वसंवेद्यं स्वेनैव स्वप्रकाशनात् ॥
पूर्वपूर्वप्रत्ययकं प्रतिक्षणविनश्वरम् । निरन्तरसमाबद्धसन्तानक्रमसङ्गतम् ॥
सर्वप्राणिभृतामेतच्चित्तमोजायतेतराम् । तच्च सन्तानभेदेन प्रतिसत्त्वं प्रभिद्यते ॥
व्यपेतकल्पनाजालं निर्मलं विदुषां तु तत् । वासनारूषितं तत्तु कल्पनाभिरुपप्लुतम् ॥
आभात्यविदुषामेवं नीलपीतसितात्मना । अनादिचित्तसन्तानमन्यान्यदनुवर्तते ॥
तत्स्यादालयविज्ञानमहङ्कारोपलक्षितम् । यत्तत्प्रवृत्तिविज्ञानं नीलाद्याकारचित्रितम् ॥
तदेतदुभयं चित्ताद्वस्तुतो नातिरिच्यते । वातवेगसमुत्क्षिप्तास्तरङ्गा इव तोयधेः ॥
अस्मादालयविज्ञानाद्वासनापरिपाकतः । इदं प्रवृत्तिविज्ञानं नानाकारं प्रजायते ॥

उक्तंच लङ्कावतारसूत्रे—[५०]

"ओघान्तरजलस्थानीयादालयविज्ञानात् प्रवृत्तिविज्ञानतरङ्ग उत्पद्यते ।" तत्रैव । [५१]
"तरङ्गा ह्युदधेर्यद्वत्पवनप्रत्ययेरिताः । नृत्यमानाः प्रवर्तन्ते विच्छेदश्च न विद्यते ॥
आलयौघस्तथा नित्यं विषयपवनेरितः । चित्रैस्तरङ्गविज्ञानैर्नृत्यमानः प्रवर्तते ॥
नीले रक्तेऽथ लवणे शङ्खे क्षीरे च शार्करे ।......॥

नचान्ये न च नानन्ये तरङ्गा ह्युदधेर्मताः । विज्ञानानि तथा सप्त चित्तेन सह संयुताः ॥
उदधेः परिणामोऽसौ तरङ्गाणां विचित्रता । आलयं हि तथा चित्तं विज्ञानाख्यं प्रवर्तते ॥" इति ।

आभ्यन्तरं चित्तमेव नीलाद्याकारयोगतः । भूत्वा प्रवृत्तिविज्ञानं व्यवहाराय कल्पते ॥
तस्मादाभ्यन्तरा एव नीलपीतसितादयः । बाह्या इवावभासन्ते सुधीभ्योऽन्ये न चैव ते ॥
उक्तंचाचार्यधर्मकीर्तिना—

"सहोपलम्भनियमादभेदो नीलतद्धियोः । भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये ॥"
"अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः" ...

अविद्यायां विनष्टायां विनष्टे वासनाङ्कुरे । ग्राह्यग्राहकभावादिपरिक्षोभविवर्जितम् ॥
अहङ्कारापरामृष्टं चित्तं तिष्ठति निर्मलम् । तस्माच्चित्ताज्जगत्यस्मिन्नान्यत्किञ्चन विद्यते ॥
चित्तमेकं तु तस्तत्त्वं पारमार्थ्येन कीर्तितम् ॥ इति ।

तथाचोक्तं लङ्कावतारसूत्रे—

"पुद्गलः सन्ततिः स्कन्धाः प्रत्यया अणवस्तथा । प्रधानमीश्वरः कर्ता चित्तमात्रं वदाम्यहम्" ॥ इति ।
[ बोधिच० ४८४ ]

यदीरितं महायानं तदेषामपि सम्मतम् । बोधिसत्त्वैकसंप्राप्यं श्रेष्ठं निर्वाणपर्वणि ॥
यत्तद्बुद्धपदं प्रोक्तं तदप्येषामभीप्सितम् । अस्मिन्विज्ञानवादे नः प्रतिभाति द्वयी गतिः ॥
विज्ञानस्य स्वभावश्चेत् याऽसावजडरूपता । जडानां तत्त्वतोऽभावात् कस्माद्यात्मवृत्तिरुच्यते ॥
तन्निस्स्वभावता सिद्धा प्राप्ता माध्यमिकी गतिः । विज्ञानाद्वयभावे तु साधिते लब्धसंश्रयः ॥
क्षणभङ्गविवादेन पतेदुपनिषत्पदे ॥

यद्यप्ययमेतावता निबन्धेन विरचितः सौगतसमयोपन्यासो न (तत्त्वसङ्ग्रह) निबन्धशरीरविमर्श-पदमधिरोहति । निबन्धशरीरविमर्शस्तु साक्षादिह सङ्गतः । तथाऽप्ययं (तत्त्वसङ्ग्रह) निबन्धः परस-मयैकनिरसनप्रधानो न प्रकाशयति सौगतसमयप्रक्रियाम् । अविज्ञातसौगतसमयप्रक्रियस्य नायं निबन्धः स्वशरीरं सम्यगाविष्कर्तुं प्रभवतीति पारम्पर्यमुपयोगमभिसन्दधानैरयमस्माभिरादृतो लेखविस्तरः ।

**निबन्धस्यास्य तात्पर्यम् ।**

अस्य निबन्धस्य प्रदर्शितेषु त्रिषु पक्षेषु (सर्वास्तित्ववादविज्ञानवादशून्यवादेषु) कस्मिन् पक्षे हार्दमित्येतद्विचार्यम्—तत्र सर्वास्तिवादस्तु प्रतिक्षिप्तो बाह्यार्थपरीक्षायाम् । आश्रि-तस्तु विज्ञानवादः । सम्भाव्येतैतावता विज्ञानवादे हार्दमिति । वचनानि च तदभिव्यञ्जकानि तत्र तत्र दृश्यन्ते । तथाहि—औपनिषदात्मपरीक्षायाम्—

"तेषामल्पापराधं तु दर्शनं नित्यतोक्तितः" [ १२३ ] इति मूलम् । अस्य व्याख्यानम्—"अल्पापराधमिति । ज्ञानमात्रस्य युक्त्युपेतस्याभ्युपगमात् । किमिति तत्रापराध उच्यत इत्यत्राह—नित्यतोक्तित" इति । लोकायतपरीक्षायाम्—"नहि ज्ञानं युक्तं कायात्मकं तव" इति मूलम् [ ५३७ ] अस्य व्याख्यानम्—"मम तु युक्तं विज्ञानमात्रवादिनः, आलयविज्ञानस्वभावत्वात्कायस्य" इति [ ५३७-८ ] "अद्वयज्ञानपक्षे तु नायं हेतुः प्रसिद्ध्यति" [ ५३७-२० ] इति च मूलम् । बाह्यार्थपरीक्षायाम्—

"विवादास्पदमारूढं विज्ञानत्वादतो मनः । अद्वयं वेद्यकर्तृत्ववियोगात्प्रतिबिम्बवत् ॥"

इति मूलम् [ ५८१ ] अस्य च व्याख्यानम्—"वेद्यकर्तृत्वद्वयविरहेणाद्वयमिष्टम्—न तु सर्वथा-ऽभावादित्यर्थ" इति । तत्रैव समनन्तरश्लोकव्याख्याने—"कथमद्वयं साध्यतेनेष्टम्—किं भासमा-नस्य नीलाद्याकारस्य ज्ञानरूपस्य चानुभवसिद्धस्याभावात्, कथमिदं नाम योज्यते । तथासति सर्व-भावप्रसङ्गात् । अत्र वक्तव्यम् । न सर्वाभावो यस्मात् स्वव्यतिरिक्तस्य ग्राह्यस्य पृथिव्यादेः स्वलक्षणतो-ऽसत्त्वात्, सन्तानान्तरस्य तु ग्राह्यरूपेणाभावात् ग्राह्याकारशून्यं, तदपेक्ष्य प्रकल्पितं तु यद्विज्ञानस्य कर्तृत्वं विजानातीति विज्ञानमिति कृत्वा तस्याभावात् ग्राहकाकारशून्यम्, नतु विज्ञानस्वलक्षणस्यापि सर्वस्य सर्वेणाभावात् । तथाचोक्तम्—"नीलपीतादि यत् ज्ञाने बहिर्वदवभासते । तत्र सत्यमतो नास्ति विज्ञेयं तत्त्वतो बहिः । तदपेक्षा च संवित्तेर्मता या कर्तृरूपता । सा न सत्यमतः संविदद्वयेति

विभाव्यते" इति । एवं च कृत्वा प्रज्ञापारमितापाठः सुनीतो भवति—"विज्ञानं विज्ञानस्वभावेन शून्यं लक्षणशून्यतामुपादाये"ति । तत्रैवोत्तरत्र—

"विज्ञप्तिमात्रतासिद्धिर्धीमद्भिर्विमलीकृता । अस्माभिस्तद्दिशा यातं परमार्थविनिश्चये ॥" इति मूलम् । [५८२]

सर्वज्ञपरीक्षायाम्—

"एतच्च सर्वं बाह्यार्थसम्भवे चोद्यमवतरति विज्ञानवादनये तु दूरीकृतावकाशमेतत्" इति । [५६५]

तत्रैव—

"निराकारादिचिन्ता तु सर्वज्ञे नोपयुज्यते । यथा हि भवतां ज्ञानं क्वचिदर्थे तथा परम् ॥" इति मूलम् [९३५]

अस्य च व्याख्यानम्—"येयमस्माभिर्विज्ञानवादस्थितैर्निराकारचिन्ताऽकारि" इति । [९३६]

तेष्वेषु वचनेषु यदेतद्वचनमौपनिषदपरीक्षायां स्वल्पापराधमित्यादि तद्व्यक्तमवगमयति विज्ञानवादम् । यदिदं वचनं लोकायतपरीक्षायाम्—'मम तु युक्तं विज्ञानमात्रवादिन' इति, तन्न कस्याप्यनुवादरूपतया प्रवृत्तं येनास्य परहार्दपरता सम्भाव्येत । किन्तु लोकायतमतप्रतिक्षेपात्प्रवृत्तं ममेत्यपरोक्षनिर्देशगर्भं गमयति विज्ञानवादे हार्दं निबन्धस्य । अद्वयज्ञानपक्षे त्विति द्वितीयं वचनं तु तदनुबन्धितया तथैव । यश्चेदमपरं वचनम्—'विज्ञप्तिमात्रतासिद्धिर्धीमद्भिर्विमलीकृता । अस्माभिस्तद्दिशा यातं परमार्थविनिश्चये॥' इति, अत्रायमस्माभिरित्यपरोक्षनिर्देशः परमार्थविनिश्चय इति निर्देशश्च विज्ञानवादे हार्दं गमयति । विज्ञानमप्यपरमार्थं मायामयमिति माध्यमिकाः । अपाक्रियते च बाह्यार्थस्येव विज्ञानस्यापि शून्यत्वं माध्यमिकाभिमतम् । "विवादास्पदमारूढं विज्ञानत्वादतो मनः । अद्वयं वेद्यकर्तृत्ववियोगात्प्रतिबिम्बव" दिति वचनेन । विवरणं चास्य—"वेद्यकर्तृत्वद्वयविरहेणाद्वयत्वमिष्टम्, नतु सर्वथाऽभावेने"ति । इदमेव समनन्तरश्लोकव्याख्याने—"कथमद्वयं साध्यत्वेनेष्टम्, किं भासमानस्येत्यादिना ग्रन्थसन्दर्भेण दृढी-कृतम्—तत्रहि नीलाद्याकारस्य ज्ञानरूपस्य चाभावाच्चाद्वयत्वं सिषाधयिषितं चित्तस्य, किन्तु पृथिव्या-देर्ग्राह्यलक्षणस्याभावात् तत एव ग्राह्यलक्षणसापेक्षस्य ग्राहकस्याप्यभावात् ग्राह्यग्राहकद्वयरहितत्वमेव तु सिषाधयिषितमद्वितीयत्वं चित्तस्य, अत एव च ग्राह्यग्राहकद्वयलक्षणविरहेण विज्ञानस्वभावशून्यता विज्ञानस्योच्यते नतु सर्वात्मना विज्ञानस्वभावविरहात्, स्वसंवेदनस्वभावस्यानपायात् । इयमेव तु स्वसंवेद्यता—स्वप्रत्ययेभ्यो जडव्यावृत्ततयोत्पत्तिः । माध्यमिका हीदृशमपि स्वभावं न मन्यन्ते । अतः शून्यं चित्तमाचक्षते बाह्यवत् । बोधिचर्यावतारपञ्जिकायां प्रपञ्चितमेतत् । प्रसङ्गे निरूपयिष्यामश्चानुपद-मिदम् । अत एव चाद्वयमिति निर्देशस्वारस्यम्, अन्यथा शून्यमित्येव निर्दिश्येत । यानि च वचनानि सर्वज्ञपरीक्षायां तानि विज्ञानवादाश्रयमुखेन सर्वज्ञसाधनाय प्रवृत्तानि विज्ञानवादे हार्दमवगमयन्ति । इदं च वचनमारम्भे—'एतेन चित्तमात्रात्मक एवेति दर्शयती'ति [१४] ।

इदमत्र ब्रूमः । अयं हि निबन्धकारो नैरात्म्यबोधनैकान्तां सौगतसमयसरणिं निष्कण्टकां सुखप्रचारामाधातुकामस्तत्र प्रवृद्धान् कापिलादिवादकण्टकान् सुदूरमेकैकशो निरस्यति । वादाश्चै-षामयथावत्प्रतीत्यसमुत्पादावबोधनैकान्ताः स्कन्धधात्वायतनानां यथावस्थितस्वरूपावबोधनपथे कण्टका-यन्ते, आत्मवादश्चैषां नैरात्म्यावबोधनलक्षणे नैःश्रेयसमार्गे, इति साक्षात्प्रतिकूलाः । तत्सौगतसमयं संरक्षता स्वसमयस्वरूपावबोधनमिव प्रतिकूलनिरसनमपि प्रथमं कर्तव्यं नाम । निबन्धे चास्मिंस्तत्र तत्र

प्रतिपक्षनिरसन इव न स्वसमयप्रक्रियावबोधनसमादरो दृश्यते । न हि स्कन्धायतनादयः प्रतीत्य-समुत्पादा निरूपिताः । न वा प्रतीत्यसमुत्पादताप्रकारः । न वा चित्तचैत्तविभागः । न वा निःश्रेयस-मार्गप्रक्रिया । तदस्य निबन्धस्य ये साक्षाद्विरोधिनः प्रकृत्यादिवादाः कापिलादयस्तन्निरसन एव परमं तात्पर्यमिति निश्चीयते । अत एवायं परैः सह तत्र तत्र विवदन् वैभाषिकसौत्रान्तिकादीनात्मीयेषु गणयन् प्रतिवदति । तथाहि लोकायतपरीक्षायाम्—

'ये चेह सुधियः प्राहुरप्रतिष्ठितनिर्वृतीन् । जिनांस्तथाननिष्ठत्वं यानयोश्च प्रचक्षते ॥
तान्प्रत्ययमसिद्धश्च' इति [५३९] ।

अयं च माध्यमिकानुवादः । तथा श्रुतिपरीक्षायाम्—
'प्रतिसङ्ख्यानिरोधादेः प्रसिद्धा सांवृतत्वतः' इति [७३०] । इदं च सौत्रान्तिकनयाश्रयणेन ।
'न च नाशात्मकाविष्टौ निरोधौ सात्रवैर्यतः । ......त्वन्तेऽलीकमानिनः' इति [७३०]

इदं च वैभाषिकमताश्रयणेन । स्थिरभावपरीक्षायां व्याख्यातुरिदं वचनम्—'अतोऽस्यामेव स्थिरभावपरीक्षायां सकलशास्त्रार्थपरिसमाप्तिर्भवतीत्युक्तं भवति' इति [१३१] । अनेन वचनेन अस्य शास्त्रस्य प्रकृत्यादिवादलक्षणपरमतनिरसन एव परमं हार्दमिति स्पष्टं गम्यते । क्षणभङ्गप्रसाधनेनैव पराभिमताः प्रकृत्यादिवादाः परास्ता भवन्ति । परमतप्रकृत्यादिनिरसनमेव अनेन शास्त्रेण चिकीर्षितमिति हि तदाशयः । निबन्धशरीरं सर्वतो विमृश्य पश्यतां स्पष्टं विज्ञायेत परमतनिरसनलक्षणवादैकपरता । परमतनिरसनशेषतया तु स्वमतमपि क्वचित्क्वचिद्गम्यते । अनया शैल्या तु विज्ञानवाद एवेह प्रस्तुत इति ।

अभिज्ञाः कतिचन निबन्धकारमिमं स्वातन्त्रिकमाध्यमिकमाचक्षते । स्यादेवम् । किन्तु निबन्धो-ऽयं स्वातन्त्रिकमाध्यमिकमतमवलम्ब्य प्रवृत्त इति तदा निश्चेतुं शक्नुमो यदा स्वातन्त्रिकमाध्यमिकप्रक्रिया प्रकाशैकस्वभावविज्ञानमात्रपारमार्थ्यवादमनुसरतीत्येतदवगच्छेम । प्रक्रियाप्रदर्शकप्रकरणग्रन्थस्तु न कश्चिदुपलब्धः । प्रकाशैकलक्षणविज्ञानपारमार्थ्यवादादि यदिहोदितं तद्योगाचाराणामविप्रतीपम् । माध्यमिकयोगाचारोयं शान्तरक्षित इति परे । य एव स्वातन्त्रिकमाध्यमिकास्त एव माध्यमिकयो-गाचारा इत्यपि व्यवह्रियन्ते उतान्ये ? । नागार्जुनस्य भूयसा प्रसङ्गापत्तिमुखेनैव परमताद्विनिवर्त्य स्वमतमवगमयतो लेशतोऽपि सरणिमनुल्लङ्घमाना आचार्यबुद्धपलितचन्द्रकीर्तिप्रभृतयः प्रासङ्गिकमाध्य-मिकाः प्रथन्ते । ये तु भावविवेकप्रभृतयो मध्यमकमार्गमुपगता अपि तर्ककौशलाभिमानग्रहग्रस्तहृदयाः स्वातन्त्र्येण प्रयोगमेव पुरस्कृत्य प्रतिवादिनिरसने प्रवृत्तास्त एते स्वातन्त्रिकमाध्यमिकाः । किमन्य एव केचित् क्रमादंशतः परिगृहीतयोगाचारप्रक्रिया माध्यमिकयोगाचारा इति व्यवह्रियन्ते ? । का वा तेषा-मसाधारणी प्रक्रियाऽस्मिन्निबन्धे ? । नैकाऽत्र नः प्रतिभाति । तदत्र निर्णयपदे प्रक्रियाभिज्ञाः प्रमाणम् ।

सौगते समये तावन्मतिभेदो महान्मिथः । तत्तन्मतानुसारेण निबन्धा विविधाः स्थिताः ॥
तेषामिह प्रचारस्तु लेशतोऽपि न विद्यते । वैभाषिकादयो ये तु चत्वारः प्रथिता इह ॥
तेषां निबन्धा अप्यद्य दुर्लभा एव नः खलु । प्रलुप्ता बहवः केचित्प्रतिकृत्यात्तजीवनाः ॥

द्वित्राणि यानि लभ्यानि दुर्लभान्यपि तानि नः । क्वचिद्यदि स्यात्स्खलनं पण्डितैः प्रतिबोध्यताम् ॥

प्रकृत्यादिपरीक्षाभिर्निबन्धो यो विजृम्भते । तत्रास्य तत्तदंशेषु सारः संक्षिप्य दर्श्यते ॥

निबन्धस्यास्य सारविचारः ।

केषां तत्त्वानामिह सङ्ग्रहो यदयं नाम्ना तत्त्वसङ्ग्रहः प्रथते ? । सौगतसमयसिद्धानाम् । ननु न पञ्चस्कन्धाः पदार्थाः प्रदर्श्यन्ते, न वाऽऽयतनानि, न वा धातवः, न वा मार्गः, कथमिह तत्त्वानां सङ्ग्रहः ? । सत्यम् । अप्यवगतैस्ताद्रूप्येण प्रणश्यति मोहबीजमविद्या ? । न । अथ कथं तानि तत्त्वानि ? । ताद्रूप्येणावगतानि न तत्त्वत इति चेत् । कानि तत्त्वं तेषाम् ? । प्रतीत्यसमुत्पादता, क्षणभङ्गुरता, स्वलक्षणता, निरात्मता च । न चैतानि तत्त्वानि दृष्टमात्रेषु स्कन्धेषु, निरूपितेषु वा स्कन्धायतनादिषु लक्षणतः, प्रपञ्चितेषु वाऽवान्तरप्रभेदेन, भवन्त्यवधृतानि । नाप्यनवगतपारमार्थिकापारमार्थिकविभागेषु तेषु । तर्हि तान्येव मुख्यानि, तत्त्वमिति व्यपदेशं च तान्येवार्हन्ति यैः प्रकारैरवगमादविद्या प्रणश्येत्, तानि च नैरात्म्यादितत्त्वानि परीक्षैकसमधिगम्यानि । परीक्षायां प्रवृत्तस्य तु भवति विप्रतिपत्तिः—किं सात्मकानि उत निरात्मकानि, किमनुगतरूपाणि उत स्वलक्षणानि, किं स्थिराणि उत भङ्गुराणि, किं प्रतीत्यसमुत्पादस्वभावानि उत प्रकृतिपुरुषादिसापेक्षाणि, किमेतानि सर्वाणि परमार्थभूतानि उत नेति । मूलं च विप्रतिपत्तिषु लोकवादा वादिवादाश्च । अदुष्टैस्तु तर्कैर्विचारयतः प्रशाम्यन्ति विप्रतिपत्तयः । प्रकाशन्ते च नैरात्म्यादितत्त्वरत्नानि । तदिदमभिप्रेत्यैव चायं निबन्धकारो निःश्रेयसार्थिनां तानि तत्त्वरत्नानि परीक्षामुखेनावगमयन्निबन्धमेनमकरोत् । तस्मादयं तत्त्वसङ्ग्रह इति मुख्यामाख्यां लभते ।

तत्र निरालम्बनविज्ञानमात्रपारमार्थ्यम् ।

यद्बाह्यार्थपरीक्षायां विज्ञानं वस्तु वर्ण्यते ।
तत्सैव सारभूतेति तत्सारे दृष्टिरर्प्यते ॥

योऽयं व्यवहारो भूतभौतिकाद्याश्रयः स सर्वः सांवृतः, न परमार्थः । यदमी न परमार्था बाह्याः पदार्थाः । तथाचोक्तम्—

'बाह्यो न विद्यते ह्यर्थो यथा बालैर्विकल्प्यते । वासनालुण्ठितं चित्तमर्थाकारं प्रवर्तते ॥'

यद्येवं प्रमाणप्रमेयविभागासम्भवात् सर्वव्यवहारोच्छेदः । नैतत् । उपपद्यते हि चित्तमात्रेण स विभागः । कथम् । कथं वा बाह्येऽर्थे सत्युपपद्यते । ग्राह्यो बाह्योऽर्थः प्रमेयं प्रमाणं चित्तमिति । बाह्यो ग्राह्य इति व्याहतम्, नह्यसम्बद्धस्य ग्रहणम् । नच सम्बन्धस्तयोरर्थविज्ञानयोर्बाह्याभ्यन्तरयोः कश्चिदस्ति । सम्बन्धस्तु तादात्म्यमुत्पाद्योत्पादकभावो वा । प्रथमस्तु नेति व्यक्तम् । न द्वितीयः, नहि विज्ञानेनार्थस्योत्पत्तिः, न चार्थेन विज्ञानस्य, स हि स्वस्वपूर्वसमनन्तरविज्ञानहेतुजः । ननु समनन्तरमात्रेण न प्रत्ययसम्पत्तिः । नीलपीतादिविज्ञानवैचित्र्ये हि प्रत्ययकोटौ प्रविशति बाह्योऽर्थः । तर्हीन्द्रियमपि तथेति स्यात्तस्यापि ग्राह्यता । ननु बाह्योऽर्थः स्वं रूपं नीलाद्याकारं विज्ञानेऽर्पयन्भवति वैचित्र्ये हेतुरिति ग्राह्यता बाह्यस्य । अन्याकारस्यान्यत्रार्पणमिति तु दुर्घटम् । नह्याश्रयमपहायान्यत्रापसरेदाकारोऽयम्, नवाऽपसारयेद्विभज्यात्मनो नीलादिराश्रयः । ननु सारूप्यापादनमर्पणमुच्यते । अयं बाह्यो नीलादिः सरूपं नीलं घटयति विज्ञाने । तर्ह्यलीकाः स्युराकारा ज्ञाने समाहिताः । वैषम्यात् बाह्याकारतः, चित्रास्तरणे विद्यमाना ह्याकारा नीलादयोऽन्योन्यं । ज्ञानस्य त्वेकतया तदनन्यानां ज्ञानाकाराणामेकतैव वाच्या । न बाह्याकारबहुत्वनिबन्धनं बहुत्वम् । ज्ञानबहुत्वापत्तेः । यथा बाह्यो न तथाऽयमान्तराकार इत्यलीक एव भवेत् । सर्वथा सारूप्ये जडता च प्रसज्येत । तदलीकानामेवाकाराणामन्ततो ग्राह्यता

प्राप्नोति न समीहितार्थलाभः। सारूप्यापादकतालक्षणं ग्राहकत्वमन्ततो भाक्तमेवेति न मुख्यमपि। बाह्यार्थवादिनाऽप्येवं ग्राह्यतानिर्वाहाय विज्ञानसाकारत्वे आश्रयणीये विज्ञानाकारवैचित्र्येणैव प्रमाण-प्रमेयविभागनिर्वाहे कृतं बाह्येनार्थेन। अनाश्रित्य विज्ञानस्य साकारतां बाह्यार्थस्य ग्राह्यत्ववर्णनं सुतरां न घटते। असम्बन्धात्। ज्ञानाकारवैचित्र्ये च पूर्वपूर्वविज्ञानगता शक्तिः पूर्वपूर्वविज्ञानवैचित्र्योद्भावित-वासनापरिपाकलक्षणा कारणमिति कादाचित्कत्वोपपत्तिराकारवैचित्र्यस्य। अनादित्वाच्च भवचक्रस्य नान्योन्याश्रयणप्रसङ्गावकाशः। तद्विज्ञानमेव वासनावैचित्र्यान्नीलपीताकारमवभासते। न बाह्यो नीलादिः परमार्थः। सहोपलम्भनियमाच्च नीलादिराकारो विज्ञानादभिन्नः। तस्मात्—योऽयं नीलाद्यवभासः स विज्ञानावभास एव। ननु कथमेतत्?, ग्राहकेण हि ग्राह्यादन्येन भाव्यम्। तत्संवित्त्यवसंवित्तेः। नैतत्। अप्रसिद्धोपलम्भस्य नार्थवित्तिः प्रसिद्ध्यति। अनुभवो ग्राहको न प्रकाशते ग्राह्यस्तु केवलं प्रकाशत इति विप्रतिषिद्धं वचनम्। ग्राह्यस्य प्रकाशो ह्यनुभव एव, स चायमजडात्मा न प्रकाशत इति व्याहतं वचः। जडस्य त्वर्थप्रकाशकता नैवोपपद्यते। तस्मात्—अयं नील इत्यादिजाग्रद्विज्ञानं स्वाप्नविज्ञानवत् स्वावभासमात्रम्। बहिर्वदवभासस्तु वासनाविपर्ययकृतो भ्रम एव। ननु—अनेनेदमुक्तं भवति—विज्ञानं ग्राहकान्तरनिरपेक्षं ग्राह्यान्तरनिरपेक्षं स्वात्मानं स्वस्मादभिन्नमाकारं च गृह्णातीति। इदं चानुपपन्नम्—एकस्यैव कर्तृकर्मक्रियात्मतानुपपत्तेः। सत्यम्। न वयमात्मसंवेदनतां ग्राह्यग्राहकभाव-लक्षणां ब्रूमः। किंतु—

"विज्ञानं जडरूपेभ्यो व्यावृत्तमुपजायते। इयमेवात्मसंवित्तिरस्य याऽजडरूपता॥
क्रियाकारकभावेन न स्वसंवित्तिरस्य तु। एकस्यानंशरूपस्य त्रैरूप्यानुपपत्तितः॥
तदस्य बोधरूपत्वाद्युक्तं तावत्स्ववेदनम्।" [ ५५९ ]

प्रकृत्या प्रकाशात्मतया नभस्तलवर्त्यालोकवद्विज्ञानं समुत्पद्यते स्वप्रत्ययेभ्यः। एतत्स्वभावतै-वास्याः स्वसंवेदनता सेयं विज्ञप्तिः। स्वानन्यनीलाद्याकारा च पूर्वपूर्ववासनापरिपाकात्समुपजायते इति तैस्त्वाकारैरुपलक्षिता प्रकाशमाना स्वसंवेदनरूपैव। इयांस्तु विशेषः—ये पुनरेते नीलाद्याकारा अपरमार्था नाम ते, अनाद्यविद्यामूलवासनापरिपाककल्पितत्वात्। तत् अभूतानामेषां संवेदनकर्मत्वस्य सुतरां न प्रसङ्गः। "अभूतमाकारं वेत्तीति व्यपदिश्यते विभ्रमात्, नहि तत्त्वेन वेत्ति, निर्विषयं हि तत्"। [५७३]

उक्तं च—

"अभूतकनकाकाङ्क्षाशुद्धिवद्बुद्धिरिष्यते।" इति [ ५७२ ]

तथाच—ग्राह्यग्राहकभावरहिता नभस्तलवर्त्यालोकवत्केवलं प्रकाशस्वभावतया स्वसंवेदनस्वभावा विज्ञप्तिरिति नैकस्य कर्तृकर्मक्रियात्मताप्रसङ्गः। ननु तर्हि ग्राह्यग्राहकभावरहिततया निःस्वभाव-तया शून्यताप्रसङ्गः। स्वाद्यामेवंरूपा शून्यता। हन्त माध्यमिकाभिमतः सर्वशून्यवाद एवादतः स्यात्। यत् विज्ञानमपि निःस्वभावं शून्यमिति पर्यवसितम्। नैतत्। असत्यपि लोकतोऽवगते ग्राह्यग्राहक-स्वभावे यः स्वसंवेदनलक्षणो विज्ञानस्वभावः प्रकाशलक्षणः "इयमेवात्मसंवित्तिरस्य याऽजडरूपते" त्युक्तः, स त्वस्त्येवेति न सर्वात्मना नैरात्म्यमिति न सर्वात्मना शून्यता। येनादृतो विज्ञानपक्षः परि-त्यक्तो भवेत्। अयमपि स्वसंवेद्यस्वभावो नेति तु माध्यमिकाग्रेसरः। तथाच बोधिचर्यावतारपञ्जिकायां विज्ञानवादनिरसनप्रकरणे—"न पुनरस्माभिः कर्मकर्तृक्रियाभेदेन ज्ञानस्यात्मप्रकाशनमिष्यते, एकस्य

सतः कर्मादिस्वभावस्यायोगात्। तत्र क्रियादिभेदेन दूषणेऽपि न किञ्चिद्दूषितमस्माकं स्यात्। स्वहेतु-जनितस्यात्मप्रकाशनस्यानुपघातात्। इति नात्मसंवेदने प्रतिपादितदोषप्रसङ्गः। तदुक्तम्—"विज्ञानं जड-रूपेभ्यो व्यावृत्तमुपजायते। इयमेवात्मसंवित्तिरस्य याऽजडरूपता। क्रियाकारकभेदेन न संवित्तिरस्य तु। एकस्यानंशरूपस्य त्रैरूप्यानुपपत्तित इति" इत्यन्तेन विज्ञानवादिनां मतमनूद्य, अत्रोच्यत इत्या-दिना निरस्यते—"अत्रोच्यते—क्रियाकारकभेदेन व्यवहारप्रसिद्धं शब्दार्थमधिगम्य दूषणमुक्तम्, स्वसंवेदनस्य तदर्थाभिधायकत्वात्। यदि पुनर्दोषभयाल्लोकप्रसिद्धोऽपि शब्दार्थः परित्यज्यते तदा लोकत एव बाधा भवतो भविष्यति। इत्थमपि न परमार्थसिद्धिः। तथाहि—हेतुप्रत्ययोपजनितस्य प्रति-बिम्बस्येव निःस्वभावत्वमुक्तम्। (माध्यमिकैः समर्थितमित्येतत्) तथा च सुतरां न स्वसंवेदनं विज्ञानस्य। न चापि जडस्वभावता माध्यमिकवादिनं प्रति कस्यचित्सिद्धा, येन जडव्यावृत्तमजडं स्वसंवेदनं स्यात्। ततो निःस्वभावतया न कथंचिदपि न स्वसंवेदनसिद्धि"रिति।

तत् सिद्धम्—

"विवादास्पदमारूढं विज्ञानत्वादतो मनः। अद्वयं वेद्यकर्तृत्ववियोगात्प्रतिबिम्बवत्॥"

[त. ५८१]

अयमत्र सङ्ग्रहः—

सेयं विज्ञानधारा गगनतलगतालोकवत्स्वप्रकाशा<br>
नानाकारावभासा स्फुरति बहुविधा स्वाप्नवद्वासनातः।<br>
ग्राह्यत्वग्राहकत्वद्वयरहिततया ज्ञप्तिमात्राऽद्वितीया<br>
सूते सैवेयमेका व्यवहृतिमखिलां स्वान्यबाह्यानपेक्षा॥

गृह्णाति ज्ञानमर्थानिति जगति मतो ग्राहकत्वस्वभावः<br>
संवृत्यैव प्रवृत्तो नतु विषयितया वस्तुतस्तेन शून्यम्।<br>
नाप्यात्मग्राहकं तत्परमजडतया स्वप्रकाशैकरूपं<br>
तच्चाविच्छिन्नधारं प्रवहति सततं सत्त्वभेदादनन्तम्॥

परलोकव्यवस्थादि।

लोकायतपरीक्षादौ विस्तरेणोपवर्णितम्।<br>
परलोकव्यवस्थादि प्रसङ्गादिह वर्ण्यते॥

यद्यपि क्षणभङ्गुरं विज्ञानम्। अथापि न परलोकव्यवस्थाया न वा बन्धमोक्षव्यवस्थाया भङ्गः, न वा कृतनाशाकृताभ्यागमापातः। न वा स्मृत्याद्यनुपपत्तिः। नियतकार्यकारणकानाद्यविच्छिन्नविज्ञानसन्ता-नसम्पत्तिर्हि घटयति सर्वम्। तथाहि—प्रतिपुद्गलं विज्ञानसन्तानमन्यान्यत्, तत्र पूर्वपूर्वविज्ञानमुत्त-रोत्तरं विज्ञानमुपनिबध्नातीति सन्तानसम्पत्तिः। सेयं सन्तानसम्पत्तिर्न जन्ममरणमात्रावधिका, येन पर-लोकवादोपरोधः स्यात्। जन्मनः प्राक्पश्चादप्यनुबद्धविज्ञानसन्तानसम्बन्धा हि सा। यथा जीवतोऽ-नुवर्तमानं विज्ञानं पूर्वपूर्वविज्ञानहेतुकमनुवर्तते तथैव गर्भादावादिविज्ञानमपि पूर्वपूर्वक्रमोपनिपतितचित्त-हेतुकं हि भवति। कादाचित्केन तु सहेतुकेन भाव्यम्। देह एवास्य हेतुरिति तु दुर्वचम्। नहि स्वस्य वा परस्य वा देहो विज्ञानरहितो दृष्टः, येनास्य विज्ञानहेतुत्वं वक्तुं शक्येत। नहि युगपदुपलभ्यमान-योर्मिथो हेतुहेतुमद्भावो भवेत्। या चेन्द्रियसङ्घातसम्पन्नस्य देहस्य रूपादिविज्ञानवैचित्र्यहेतुतो-

